॥ अथ ॥

# रामनवमीव्रतकथा

भाषाटीका सहितम् ।

प्रकाशक—भार्गवपुस्तकालय, गायघाट, बनारस १.

ब्राञ्च—कचौड़ीगली, बनारस । मूल्य ॥)

अथ

# रामनवमीव्रतकथा

भाषाटीका सहितम् ।

प्रकाशक—भार्गवपुस्तकालय, गायघाट, बनारस १.

ब्राञ्च—कचौड़ीगली, बनारस ।   मूल्य ॥)

॥ श्रीगणेशाय नमः ॥

# अथ रामनवमीव्रतपूजाप्रयोगः ।

तत्र व्रतकर्ता श्रीरामनवम्यां प्रातःस्नानादि नित्यकृत्यं विधाय श्रीराम-पूजार्थं स्वगृहोत्तरभागे यथासम्भवं मण्डपं पूजासामग्रीं च सम्पाद्य नद्यादौ मध्याह्नस्नानादि विधाय पूजास्थानमागत्य प्रयतः स्वासने उपविश्य ईशानकोणे दीपं प्रज्वलय्य "नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥" इति तं संपूज्य आचम्य शान्तिपाठं कृत्वा सुमुखश्चेत्यादिना गणेशाय पुष्पाञ्जलिम्, ॐ नमोऽस्त्वनन्तायेति स्वेष्टदेवतायै पुष्पाञ्जलिं च समर्प्य सामान्यार्घ्यं संस्थाप्य सूर्यायार्घ्यं दत्त्वा भूतोत्सादनमासनविधिं च

कृत्वा गुरुं गणेशं च ध्यात्वा नत्वा द्वारपूजां कुर्यात्। पूर्वस्यां—ॐ हनुमते नमः, दक्षिणस्यां—ॐ गरुत्मते नमः, पश्चिमायां—ॐ अङ्गदाय नमः, उत्तरस्यां—ॐ नीलाय नमः। ततो विशेषार्घ्यं संस्थाप्य तज्जलेन आत्मानं सर्वां पूजासामग्रीं च त्रिः प्रोक्ष्य प्राणानायम्य [1]संकल्पं कुर्यात्। ॐ विष्णुः ३ अद्येहेत्यादि श्रीरामनवम्यां शुभपुण्यतिथौ सकलपापक्षयकामः अमुकगोत्रः अमुकशर्माऽहं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीरामचन्द्रप्रीत्यर्थं श्रीरामनवमीव्रतं करिष्ये। तदङ्गत्वेन सुवर्ण-

१ नवीनव्रतग्रहणे विशेषः—ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं सकलपापक्षयपूर्वकं श्रुतिस्मृतिपुराणोक्तफलावाप्तये श्रीरामप्रीत्यर्थमद्यारभ्य यावज्जीवं रामनवमीव्रतं करिष्ये।
इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो। निर्विघ्नं सिद्धिमायातु त्वत्प्रसादात्सुरेश्वर॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे मृतो ह्यहम्। तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन॥
इति व्रतं स्वीकुर्यात्।

निर्मितप्रतिमायां शालग्रामशिलादौ वा सपरिवारस्य श्रीरामचन्द्रस्य षोड-शोपचारैः पूजनं करिष्ये । निराहारपक्षे तु—उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव । तेन प्रीतो भव त्वं भो संसारात् त्राहि मां हरे ॥ अस्यां रामनवम्यां तु रामाराधनतत्परः । उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि ॥ इमां स्वर्णमयीं रामप्रतिमां च प्रयत्नतः । श्रीरामप्रीतये दास्ये रामभक्ताय धीमते ॥ प्रीतो रामो हरत्वाशु पापानि सुबहूनि च ॥ अनेक-जन्मसंसिद्धान्यभ्यस्तानि महान्त्यपि । इति भूमौ जलमुत्सृजेत् । ततः पीठपूजां कुर्यात् । ॐ विमलायै नमः । ॐ उत्कर्षिण्यै नमः । ॐ ज्ञानायै नमः । ॐ क्रियायै नमः । ॐ योगायै नमः । ॐ सत्यायै नमः । ॐ प्रसिद्ध्यै नमः । ॐ प्रकृत्यै नमः । ॐ अनुग्रहायै नमः ।

मध्ये—ॐ नमो भगवते सकलशक्तियुक्ताय अनन्ताय संयोगपीठात्मने नमः। इति पीठं संपूज्य शक्त्यनुसारेण निर्मापितां सौवर्णीं राजतीं वा प्रतिमां कृत्वाऽग्न्युत्तारणपूर्वकं "एतन्ते" 'मनोजूतिः' इति मन्त्राभ्यां संस्थाप्य कपोलौ स्पृष्ट्वा मूलमन्त्रं प्रणवादिचतुर्थ्यन्तं 'ॐ रामाय नमः' इति 'रामनामाय देव त्वं संख्यायै स्वाहा' इति च मन्त्रं पठन् प्राणप्रतिष्ठां कुर्यात्। ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छन्दांसि जगत्सृष्टिः प्राणशक्तिर्देवता आं बीजं ह्रीं शक्तिः क्रौं कीलकं प्राणप्रतिष्ठापने विनियोगः। प्रतिमायाः शिरसि हृदये च दक्षिणं करं दत्त्वा जपेत्—ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोऽहं श्रीरामदेवस्य प्राणाः जीवः सर्वेन्द्रियाणि च इहागत्य सुखं

॥ श्रीगणेशाय नमः ॥

# अथ श्रीरामनवमीव्रतनिर्णयः।

इयं च मध्याह्नयोगिनी ग्राह्या। चैत्रशुक्ले तु नवमी पुनर्वसुयुता यदि। सैव मध्याह्नयोगेन महापुण्यतमा भवेत्॥ इत्यगस्त्यसंहितोक्तेः। पूर्वेद्युरेव मध्याह्नयोगे कर्मकालव्याप्तेः सैव ग्राह्या। अष्टमीविद्धानिषेधशास्त्रापेक्षया कर्मकालशास्त्रस्य बलवत्त्वात्। दिनद्वये मध्याह्नव्याप्तौ तदभावे वा कर्मकालशास्त्रस्योभयत्र समानत्वादुदासीनत्वाद्वा पूर्वदिने पुनर्वसुनक्षत्रयुक्तामपि त्यक्त्वा परैव कार्या। नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः। उपोषणं नवम्यां च दशम्यां चैव पारणम्॥ इति माधवीयेऽगस्त्यसंहितोक्तेः। पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा॥

इति प्राशस्त्यापादकवचनापेक्षया निषेधशास्त्रस्य बलवत्त्वात्। तथा चाह माधवः—'अष्टमीविद्धा सक्षक्षापि नोपोष्या' इति। विद्धैव चेदृक्षयुक्ता व्रतं तत्र कथं भवेत्। इत्युपक्रम्य—विद्धानिषेधश्रवणात् नवमी चेति वाक्यतः। वैष्णवानां विशेषात्तु तत्र विष्णुपरैरपि॥ इति रामार्चनचन्द्रिकायां निषेधशास्त्रप्राबल्यालोचनेन ऋक्षयुक्तायास्त्याज्यत्वमभिहितम्। दशम्यादिषु वृद्धिश्चेद्विद्धा त्याज्यैव वैष्णवैः। तदन्येषां च सर्वेषां व्रतं तत्रैव निश्चितम्॥ इति च तत्रोक्तम्। अत्र 'दशम्यादिषु वृद्धिश्चेत्' इति वचनाद्यदा प्रातस्त्रिमुहूर्ता नवमी, दशमी च क्षयवशात्सूर्योदयात्प्रागेव समाप्यते, तदा स्मार्तानां तत्रैवैकादशीनिमित्तोपवासान्नवमीव्रताङ्गपारणा-लोपः स्यादतोऽष्टमीविद्धैव स्मार्तैः कार्या। वैष्णवानां त्वरुणोदयविद्धैका-

दश्या हेयत्वान्न नवमीव्रताङ्गपारणालोपप्रसङ्ग इति द्वितीयैव तैः कार्येति सूच्यते । त्याज्या विष्णुपरायणैरित्यनेन कर्मकालशास्त्रस्यापि बाध इति तदाशयः । 'दशम्यादिषु वृद्धिश्चेत्' इत्यत्र दशमीवृद्धिररुणोदयकाले सूर्योदयोत्तरं वा दशमीसत्त्वम्, आदिशब्दादेकादशीवृद्धिस्तृतीयदिने सूर्योदयोत्तरमेकादशीसत्त्वं, तत्र च द्वादश्याः क्षयस्तदाऽपि स्मार्तानां दशमीविद्धैकादश्या उपोष्यत्वान्नवमीव्रताङ्गपारणालोपप्रसङ्गोऽस्त्येव । यदा तु मुहूर्तमात्रा द्विमुहूर्ता वा नवमी, दशमी त्वरुणोदयात्पूर्वमेव समाप्यते, तदा मुहूर्तमात्रनवम्युपवासे द्वितीयदिने वैष्णवानामप्येकादश्युपवासप्राप्तेर्नवमीव्रताङ्गपारणालोपप्रसङ्गो भवत्येवेति अष्टमीविद्धैव मध्याह्नव्यापिनी वैष्णवैरप्युपोष्या । एवं क्षयेऽपि विद्धैवोपोष्येत्यर्थात्सिध्यति । रामार्चनचन्द्रिकामते

नवमीव्रताङ्गपारणालोपप्रसङ्ग एवाष्टमीविद्धाग्राह्यत्वप्रयोजकः। माधवमते तु कर्मकालव्याप्तिशास्त्रमपि अष्टमीविद्धाग्राह्यत्वप्रयोजकमिति विशेषः। इयं च मलमासे न कार्या। सुजन्ममप्यजस्रं स्यान्नोपवासः कुतो भवेत्। न कुर्यान्मलमासे तु महादानव्रतानि च॥ इति संग्रहवचनात्। स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले। इति निषेधाच्च। एवं जन्माष्टम्यादावपि बोद्धव्यम्। मेषसंक्रमे पूर्वाः पराश्च दश घटिकाः पुण्यकालः। रात्रौ निशीथात्पूर्वं संक्रमे पूर्वदिने मध्याह्नोत्तरं पुण्यकालः, निशीथोत्तरं संक्रमे परदिने मध्याह्नपर्यन्तं पुण्यकालः, निशीथमध्ये संक्रमे पूर्वदिने मध्याह्नोत्तरं परदिने मध्याह्नपर्यन्तं च पुण्यकालः।

इति श्रीरामनवमीव्रतनिर्णयः।

ॐ द्यौः शान्तिरन्त० । ॐ सर्वेषां वा ऽएष वेदाना ँ रसो० । ॐ अमृताभिषेकोऽस्तु । तदन्ते—ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । इति आचमनं दद्यात् । वस्त्रम्—ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः० । तप्तकाञ्चनसंकाशं पीताम्बरमिदं हरे । संगृहाण जगन्नाथ रामचन्द्र नमोऽस्तु ते ॥ वस्त्राङ्गमाचमनीयं० । यज्ञोपवीतम्—ॐ तस्मादश्वाऽअजायन्त० । श्रीरामाच्युत यज्ञेश श्रीधरानन्त राघव । ब्रह्मसूत्रं सोत्तरीयं गृहाण रघुनन्दन ॥ यज्ञोपवीताङ्गमाचमनीयं० । चन्दनम्—ॐ तंय्यज्ञं बर्हिषि० । कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनं तथा । तुभ्यं दास्यामि राजेन्द्र श्रीराम स्वीकुरु प्रभो ॥ यवाक्षतान्—ॐ अक्षन्नमी० । अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वर ॥

पुष्पाणि—ॐ यत्पुरुषं व्यदधुः०। तुलसीकुन्दमन्दारजातीपुन्नागचम्पकैः। कदम्बकरवीरैश्च कुसुमैः शतपत्रकैः॥ नीलाम्बुजैर्बिल्वपत्रैरर्चयेद्राघवं विभुम्। पूजयिष्याम्यहं भक्त्या संगृहाण जनार्दन॥ अथाङ्गपूजा—श्रीरामचन्द्राय नमः पादौ पूजयामि। राजीवलोचनाय नमः गुल्फौ०। रावणान्तकाय नमः जानुनी०। वाचस्पतये नमः ऊरू०। विश्वरूपाय नमः जङ्घे०। लक्ष्मणाग्रजाय नमः कटी०। विश्वमूर्त्तये नमः मेढ्रं०। विश्वामित्रप्रियाय नमः नाभिं०। परमात्मने नमः हृदयं०। श्रीकण्ठाय नमः कण्ठं०। सर्वाधारिणे नमः बाहू०। रघूद्वहाय नमः मुखं०। पद्मनाभाय नमः जिह्वां०। दामोदराय नमः दन्तान्०। सीतापतये नमः ललाटं०। ज्ञानगम्याय नमः शिरः०। सर्वात्मने नमः सर्वाङ्गं पूजयामि।

अथावरणपूजा—ॐ हनुमते नमः। ॐ सुग्रीवाय नमः। ॐ भरताय नमः। ॐ विभीषणाय नमः। ॐ लक्ष्मणाय नमः। ॐ अङ्गदाय नमः। ॐ शत्रुघ्नाय नमः। ॐ जाम्बवते नमः। ॐ धृष्टये नमः। ॐ जयन्ताय नमः। ॐ विजयाय नमः। ॐ सुराष्ट्राय नमः। ॐ राष्ट्रवर्धनाय नमः। ॐ अकोपाय नमः। ॐ धर्मपालाय नमः। ॐ सुमन्त्राय नमः। ॐ इन्द्राय नमः। ॐ अग्नये नमः। ॐ यमाय नमः। ॐ निर्ऋतये नमः। ॐ वरुणाय नमः। ॐ वायवे नमः। ॐ कुबेराय नमः। ॐ ईशानाय नमः। ॐ ब्रह्मणे नमः। ॐ अनन्ताय नमः। ॐ वज्राय नमः। ॐ शक्तये नमः। ॐ कालदण्डाय नमः। ॐ खड्गाय नमः। ॐ पाशाय नमः। ॐ अङ्कुशाय नमः। गदायै नमः। ॐ त्रिशूलाय नमः। ॐ चक्राय नमः। सर्वावरणपूजां समर्पयामि। धूपः—ॐ

ब्राह्मणोऽस्य मुख० । वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । रामचन्द्र महीपाल धूपोऽयं प्रतिगृह्यताम् । दीपः—ॐ चन्द्रमा मनसो जात० । ज्योतिषां पतये तुभ्यं नमो रामाय वेधसे । गृहाण दीपकं चैव त्रैलोक्यतिमिरापहम् ॥ नैवेद्यं सम्प्रोक्ष्य तदुपरि तुलसीदलं दत्त्वा—ॐनाभ्या आसीद० । इदं दिव्या-न्नममृतं रसैः षड्भिः समन्वितम् । रामचन्द्रेश नैवेद्यं सीतेश प्रतिगृह्यताम् ॥ ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ उदानाय स्वाहा । ॐ समानाय स्वाहा । मध्ये पानीयम्—नमस्ते देव देवेश सर्वतृप्तिकरं परम् । अखण्डानन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥ ततः क्षणं ध्यात्वा जपं विधाय 'गुह्याति' इति समर्प्य नैवेद्यपात्राण्युत्थाप्य मध्ये किञ्चित्पार्षदेभ्यो दद्यात्—विष्वक्सेनोद्भवाक्रूराः सनकाद्याः शुकादयः । महाविष्णुप्रसादोऽयं

चिरं तिष्ठन्तु स्वाहा । ततो ध्यानम्—कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम् । दक्षिणाङ्के दशरथं पुत्रावेक्षणतत्परम् ॥ पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभम् । पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ॥ अग्रेऽव्यग्रं हनुमन्तं रामानुग्रहकाङ्क्षिणम् । शालग्रामपक्षे शिलां तत्र पीठे निधाय ध्यायेत् । नात्र प्राणप्रतिष्ठाद्युपयोगः । ॐ अतसीपुष्पनीलं पीतवाससं सौदामिनीनिभजानकीवीक्षणपरम् । सौमित्र्यङ्गदादिसेवितपादमग्रेस्थितवायुसूनुं सुग्रीवविभीषणादिभिर्गीयमानशतं धनुर्बाणपाणिं मुकुटाङ्गदधरं मुक्तादामविभूषितं श्रीरामं शान्ताकारमिति च ध्यायेत् । आवाहनम्—ॐ सहस्रशीर्षा० । आवाहयामि विश्वेश जानकीवल्लभं विभुम् ।

१ शालग्रामादौ सर्वदा देवसान्निध्येऽपि स्वोन्मुखीकरणार्थमावाहनर्चः पाठः कर्त्तव्यः । एवं पूजासम्पूर्त्यर्थमुद्वासनर्चः [illegible]व्य इति बोध्यम् ।

कौसल्यातनयं विष्णुं श्रीरामं प्रकृतेः परम् ॥ ततः संनिधापनम्—श्रीरामागच्छ भगवन् रघुवीर नृपोत्तम । जानक्या सह राजेन्द्र सुस्थिरो भव सर्वदा ॥ रामभद्र महेष्वास रावणान्तक राघव । यावत्पूजां समाप्येऽहं तावत्त्वं सन्निधौ भव ॥ संमुखीकरणम्—रघुनायक राजर्षे नमो राजीवलोचन । रघुनन्दन मे देव श्रीरामाभिमुखो भव ॥ आसनम्—ॐ पुरुष एवेदं० । राजाधिराज राजेन्द्र रामचन्द्र महीपते । रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो ॥ पाद्यम्—ॐ एतावानस्य० । त्रैलोक्यपावनानन्त नमस्ते रघुनायक । पाद्यं गृहाण राजर्षे नमो राजीवलोचन ॥ अर्घ्यम्—ॐ त्रिपादूर्ध्वं० । परिपूर्णपरानन्द नमो रामाय वेधसे । गृहाणार्घ्यं मया दत्तं कृष्ण विष्णो जनार्दन ॥ आचमनम्—ॐ ततो विराड० । नमः

सत्याय शुद्धाय नित्याय ज्ञानरूपिणे। गृहाणाचमनं नाथ सर्वलोकैक-नायक॥ मधुपर्कः—ॐ नमः श्रीवासुदेवाय तत्त्वज्ञानस्वरूपिणे। मधुपर्कं गृहाणेमं जानकीपतये नमः॥ ततः पञ्चामृतस्नानम्। तत्र प्रथमं पयः-स्नानम्—ॐ पयः पृथिव्यां०। कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम्। पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम्॥ दधिस्नानं—ॐ दधिक्राव्णो०। पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम्। दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम्॥ घृतस्नानं—ॐ घृतवती०। नवनीतसमुत्पन्नं सर्वसन्तोष-कारकम्। घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम्॥ मधुस्नानं—ॐ मधुव्वाता०। तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु। तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम्॥ शर्करास्नानं—ॐ आप्यायस्व०। इक्षुसारसमुद्भूता

शर्करा पुष्टिकारिका । मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ उद्वर्तनस्नानम्—ॐ गन्धस्ते सोम० । नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् । उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ गन्धोदकस्नानम्—ॐ गन्धद्वारां० । मलयाचलसंभूतं चन्दनागरुसम्भवम् । चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥ शुद्धोदकस्नानम्—ॐ तस्माद्यज्ञात्सर्वहुतः सं० । ब्रह्माण्डोदरमध्यस्थैस्तीर्थतोयै रघूत्तम । त्वां स्नापयाम्यहं भक्त्या तद्गृहाण जनार्दन ॥ ततः पञ्चोपचारपूजाम् 'ॐ रामाय नमः' इति मन्त्रेण कृत्वाऽभिषेकार्थं निर्माल्यं विसृज्य स्नापनधारापात्रे गन्धयवाक्षतपुष्पाणि समर्प्याभिषेकं कुर्यात् । देवे आसनार्थं पूजनार्थं च तुलसीदलं समर्पयेत् । ॐ सहस्रशीर्षा० १६ । ॐ पयः पृथिव्यां० । ॐ विष्णो रराटमसि० । ॐ इदं विष्णु० ।

सर्वे गृह्णन्तु वैष्णवाः॥ उत्तरापोशनं०। हस्तप्रक्षालनं०। मुखप्रक्षालनं०। करोद्वर्तनार्थे चन्दनं०। ताम्बूलम्—ॐ यत्पुरुषेण हविषा०। नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम्। ताम्बूलं गृह्यतां राम कर्पूरादिसमन्वितम्॥ फलानि—ॐ याः फलिनीर्य्याऽअफला०। इदं फलं मया देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि॥ दक्षिणा—ॐ हिरण्यगर्भः समवर्त्तताग्रे०। हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥ नीराजनम्—ॐ अग्निर्ज्योतिः०। अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्। आरार्तिकमिदं देव गृहाण मम सिद्धये॥ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च॥ त्वमेव सर्वज्योतींषि आरार्तिः प्रतिगृह्यताम्॥ ॐ इद॒ꣳ हविः प्रजननंमेऽ अस्तु दशवीरꣳसर्व्वगणꣳ

स्वस्तये । आत्मसनि प्रजासनि पशुसनि लोकसन्न्यभयसनि । अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतोऽअस्मासु धत्त ॥ कर्पूरारार्तिकम्— कदलीगर्भसंभूतं कर्पूरं च प्रदीपितम् । आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव ॥ प्रदक्षिणा—ॐसप्तास्यासन्परिधयः० । यानि कानि च पापानि जन्मान्तरकृतानि वै । तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥ मन्त्रपुष्पाञ्जलिः—ॐ यज्ञेन यज्ञमयजन्त० । अथ विशेषार्घ्यदानम्— दशाननवधार्थाय धर्मसंस्थापनाय च । राक्षसानां विनाशाय दैत्यानां निधनाय च ॥ परित्राणाय साधूनां जातो रामः स्वयं हरिः । गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ॥ ततः प्रार्थनां कृत्वा विसर्जनम् । अथ प्रतिमादानम्—कृतसङ्कल्पसिद्ध्यर्थमिमां सुपूजितां श्रीरामप्रतिमां आचार्याय

दास्ये । इति सङ्कल्प्य आचार्यं सम्पूज्य—इमां स्वर्णमयीं रामप्रतिमां समलङ्कृताम् । चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते ॥ श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः ॥ इति मन्त्रेण आचार्याय प्रतिमां दद्यात् । ततः श्रीरामचन्द्रस्य पूजायाः कथाश्रवणस्य च साङ्गतासिद्ध्यर्थं सिद्धान्नेनामान्नेन वा यथाशक्ति अमुकसंख्याकान् ब्राह्मणान् भोजयिष्ये । तथा इमां भूयसीं दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्योऽन्येभ्यश्च विभज्य दास्ये । यस्य स्मृत्या च नामोक्त्या व्रतपूजाक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ १ ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ २ ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतः स्वभावात् ॥ करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत् ॥ ३ ॥ इति श्रीरामनवमीव्रतपूजाप्रयोगः ॥

॥ श्रीगणेशाय नमः ॥

# अथ श्रीरामनवमीव्रतकथा ।

अगस्त्य जी सुतीक्ष्ण से बोले कि हे मुनिश्रेष्ठ सुतीक्ष्ण ! मैं आपसे एक रहस्य कहूँगा। चैत्रमास के पहिले पक्ष की नवमी तिथि में दिन के समय पवित्र पुनर्वसु नक्षत्र के योग में उदय

अगस्त्य उवाच ॥ रहस्यं कथयिष्यामि सुतीक्ष्ण मुनिसत्तम ॥ चैत्रे नवम्यां प्राक्पक्षे दिवा पुण्ये पुनर्वसौ ॥ १ ॥ उदये गुरुगौरांशे स्वोच्चस्थे ग्रहपञ्चके ॥ मेषं पूषणि सम्प्राप्ते लग्ने कर्कटकाह्वये ॥ २ ॥ आविरासीत्स कलया कौसल्यायां परः पुमान् ॥ तस्मिन्दिने तु कर्तव्यमुपवासव्रतं सदा ॥ ३ ॥ तत्र जागरणं कुर्याद्रघुनाथपुरो भुवि ॥ प्रतिमायां यथाशक्ति पूजा

में गुरु के गौरांश ( नवमांश ) में उच्च के पांच ग्रहों में सूर्य के मेषराशि पर रहते, कर्कट लग्न रहने पर पुमान् कला से कौसल्या से प्रकट हुए। उस दिन सर्वदा उपवास व्रत करना चाहिये ॥ १-३ ॥

और रघुनाथ जी के सामने पृथिवी पर बैठकर जागरण करना चाहिये। तथा श्रीरघुनाथ जी की प्रतिमा में यथाशक्ति विधिपूर्वक पूजन करना चाहिये ॥ ४ ॥ प्रातःकाल दशमी में स्नान और सन्ध्यादिक क्रिया करके भक्ति से अपने धन के अनुसार विधिपूर्वक श्रीराम जी का पूजन करके ॥५॥

कार्या यथाविधि ॥ ४ ॥ प्रातर्दशम्यां स्नात्वैव कृत्वा सन्ध्यादिकाः क्रियाः ॥ संपूज्य विधिवद्रामं भक्त्या वित्तानुसारतः ॥ ५ ॥ ब्राह्मणान् भोजयेत्सम्यक्दक्षिणाभिश्च तोषयेत् ॥ गोभूतिलहिरण्याद्यैर्वस्त्रालङ्करणैस्तथा ॥ ६ ॥ रामभक्तान् प्रयत्नेन प्रीणयेत् परया मुदा ॥ एवं यः कुरुते भक्त्या श्रीरामनवमीव्रतम् ॥ ७ ॥ अनेकजन्मसिद्धानि पापानि सुबहूनि च ॥ भस्मीकृत्य व्रजत्येव तद्विष्णोः परमं पदम् ॥ ८ ॥ सर्वेषामप्ययं धर्मो

ब्राह्मणों को अच्छी तरह भोजन करावे और दक्षिणा गौ, पृथिवी, तिल, सुवर्ण, वस्त्र, अलङ्कार आदि देकर प्रसन्न करे ॥ ६ ॥ तथा परम प्रसन्न मन से रामभक्तों को प्रसन्न करे। इस तरह जो रामनवमी व्रत को करत[illegible] ७ ॥ वह अनेक जन्मों के किये बहुत से पापों को भस्म करके

विष्णु भगवान् के प्रसिद्ध परमपद को प्राप्त होता है ॥ ८ ॥ सबका यही धर्म हैं, भुक्ति और मुक्ति के लिये यही एक साधन कहा गया है। अशुचि ( अपवित्र ) हो अथवा पातकी हो इस उत्तम व्रत को करके ॥ ९ ॥ समस्त प्राणियों का पूज्य हो जाता है। क्योंकि व्रतकर्ता और श्रीरामजी

भुक्तिमुक्त्येकसाधनः ॥ अशुचिर्वापि पापिष्ठः कृत्वेदं व्रतमुत्तमम् ॥ ९ ॥ पूज्यः स्यात् सर्वभूतानां यथा रामस्तथैव सः ॥ यस्तु रामनवम्यां वै भुंक्ते स तु नराधमः ॥ १० ॥ कुम्भीपाकेषु घोरेषु गच्छत्येव न संशयः ॥ अकृत्वा रामनवमीव्रतं सर्वव्रतोत्तमम् ॥११॥ व्रतान्यन्यानि कुरुते न तेषां फलभाग्भवेत् ॥ रहस्यकृतपापानि प्रख्यातानि बहून्यपि ॥१२॥ महान्ति च

दोनों समान हैं। जो रामनवमी के दिन भोजन करता है; वह नरों में अधम है ॥ १० ॥ और घोर कुम्भीपाक आदि नरकों में जाता है इसमें संशय नहीं है। जो सब व्रतों में श्रेष्ठ रामनवमी व्रत को न करके ॥ ११ ॥ अन्य व्रतों को करता है तो उन व्रतों का फल उसे नहीं मिलता। जो एकान्त में पाप किये गये हैं और जो प्रकट में किये हैं तथा बहुत संख्या में हैं ॥ १२ ॥ और बड़े-बड़े हैं वे

सब श्रीरामनवमी व्रत के करने से नष्ट हो जाते हैं। हे मुने! मनुष्य भक्ति से एक भी रामनवमी व्रत के दिन ॥ १३ ॥ उपवास कर ले तो वह कृतकृत्य हो जाता है और समस्त पापों से छूट जाता है। जो मनुष्य रामनवमी के दिन श्रीरामजी की प्रतिमा का दान करता है ॥ १४ ॥ हे मुनिश्रेष्ठ!

प्रणश्यन्ति श्रीरामनवमीव्रतात् ॥ एकामपि नरो भक्त्या श्रीरामनवमीं मुने ॥ १३ ॥ उपोष्य कृतकृत्यः स्यात्सर्वपापैः प्रमुच्यते ॥ नरो रामनवम्यां तु श्रीरामप्रतिमाप्रदः ॥ १४ ॥ विधानेन मुनिश्रेष्ठ स मुक्तो नात्र संशयः ॥ सुतीक्ष्ण उवाच ॥ श्रीरामप्रतिमादानविधानं वा कथं मुने ॥ १५ ॥ कथय त्वं हि रामेऽपि भक्तस्य मम विस्तरात् ॥ अगस्त्य उवाच ॥ कथयिष्यामि तद्विद्वन् प्रतिमादानमुत्तमम् ॥१६॥ विधानं चापि यत्नेन यतस्त्वं वैष्णवो·

प्रतिमा दान की विधि से वह मुक्त हो जाता है इसमें संशय नहीं है। सुतीक्ष्ण जी अगस्त्य जी से बोले कि हे मुने! श्रीराम जी की प्रतिमा का दान कैसे किया जाता है? ॥ १५ ॥ इसे मुझ राम-भक्त के लिये आप विस्तार[illegible]हिये। अगस्त्यजी सुतीक्ष्ण जी से बोले कि हे विद्वन्! मैं आपसे

प्रसिद्ध श्रेष्ठ प्रतिमादान को कहूँगा ॥ १६ ॥ तथा विधान को भी अच्छी तरह कहूँगा क्योंकि आप वैष्णवों में श्रेष्ठ हैं। चैत्रमास के शुक्लपक्ष की अष्टमी के दिन जितेन्द्रिय हो ॥ १७ ॥ प्रथम दन्तधावन कर नदी, तड़ाग, कूप, ह्रद अथवा झरना में यथाविधि स्नान करे ॥ १८ ॥ तदनन्तर हृदय से श्रीराघव ( रामजी ) का स्मरण करता हुआ सन्ध्यादिक कार्य करे। हे विप्रेन्द्र! घर

त्तमः ॥ अष्टम्यां चैत्रमासे तु शुक्लपक्षे जितेन्द्रियः ॥१७॥ दन्तधावनपूर्वं तु प्रातः स्नायाद्यथाविधि ॥ नद्यां तडागे कूपे वा ह्रदे प्रस्रवणेऽपि वा ॥१८॥ ततः सन्ध्यादिकाः कार्याः संस्मरन्राघवं हृदि ॥ गृहमासाद्य विप्रेन्द्र कुर्या-दौपासनादिकम् ॥१९॥ दान्तं कुटुम्बिनं विप्रं वेदशास्त्रपरं सदा ॥ श्रीराम-पूजानिरतं सुशीलं दम्भवर्जितम् ॥ २० ॥ विधिज्ञं राममन्त्राणां राममन्त्रै-कसाधनम् ॥ आहूय भक्त्या सम्पूज्य वृणुयात् प्रार्थयन्निति ॥२१॥ श्रीराम-

आकर उपासना ( पूजा ) आदि करनी चाहिये ॥ १९ ॥ जितेन्द्रिय, कुटुम्बी, वेद शास्त्र में सदा निरत, श्रीराम पूजा में लीन, सुशील, दम्भरहित ब्राह्मण को ॥ २० ॥ जो कि राममन्त्रों की विधि जानता हो और राममन्त्र को मुख्य रूप से साधन मानने वाला हो उस ब्राह्मण को बुलाकर

प्रार्थना करता हुआ पूजनकर वरण करे ॥ २१ ॥ और यह कहे कि द्विजश्रेष्ठ ! मैं श्रीरामप्रतिमा-दान करूँगा। आप प्रसन्न होकर उस प्रतिमादान कर्म में आचार्य बनें, मेरे लिये आप ही राम हैं ॥ २२ ॥ इस प्रकार कहकर विप्र की पूजा करे। श्रीराम को हृदय में चिन्तन करता हुआ आचार्य

प्रतिमादानं करिष्येऽहं द्विजोत्तम ॥ तत्राचार्यो भव प्रीतः श्रीरामोऽसि त्वमेव च ॥ २२ ॥ इत्युक्त्वा पूज्य विप्रं तं स्नापयित्वा ततः परम् ॥ तैलेनाभ्यज्य पयसा चिन्तयन् राघवं हृदि ॥ २३ ॥ श्वेताम्बरधरः श्वेतगन्धमाल्यानि धारयेत् ॥ अर्चितो भूषितश्चैव कृतमाध्याह्निकक्रियः ॥२४॥ आचार्यं भोजयेद्भक्त्या सात्त्विकान्नैः सुविस्तरम् ॥ भुञ्जीत स्वयमप्येवं हृदि राममनुस्मरन्

के शरीर में तेल लगाकर जल से स्नान करावे ॥ २३ ॥ आचार्य और स्वयं श्वेत वस्त्र धारण करे तथा श्वेत गन्ध माला आदि धारण करावे, पूजन करे, भूषण आदि से भूषित करे और मध्याह्न-काल की क्रिया को समाप्त करे ॥ २४ ॥ भक्ति से विस्तार के साथ सात्त्विक अन्नों से आचार्य को भोजन करावे और हृ[illegible] राम का स्मरण करता हुआ स्वयं भी भोजन करे ॥ २५ ॥

इस तरह अष्टमी के दिन आचार्य के साथ जितेन्द्रिय रहकर एक बार भोजन करे हे मुने! शेष दिन को दिव्य राम कथा का श्रवण करता हुआ व्यतीत करे ॥ २६ ॥ और श्रीराम का स्मरण करता हुआ सायंसन्ध्यादिक क्रिया करे तथा रात्रि में आचार्य के साथ जितेन्द्रिय

॥२५॥ एकभक्तव्रती तत्र सहाचार्यो जितेन्द्रियः ॥ शृण्वन् रामकथां दिव्या-महःशेषं नयेन्मुने ॥ २६ ॥ सायंसन्ध्यादिकाः कुर्यात्क्रिया राममनुस्मरन् ॥ आचार्यसहितो रात्रावधःशायो जितेन्द्रियः ॥ २७ ॥ वसेत्स्वयं नचैकान्ते श्रीरामार्पितमानसः ॥ ततः प्रातः समुत्थाय स्नात्वा सन्ध्यां यथाविधि ॥ २८ ॥ प्रातः सर्वाणि कर्माणि शीघ्रमेव समापयेत् ॥ ततः स्वस्थमना भूत्वा विद्वद्भिः सहितोऽनघ ॥ २९ ॥ स्वगृहे चोत्तरे देशे दानस्योज्ज्व-

रहकर पृथिवी पर शयन करे ॥ २७ ॥ श्रीराम में मन लगाकर स्वयं एकान्त में वास न करे। इस तरह रात्रि बीत जाने पर प्रातःकाल उठकर यथाविधि स्नान सन्ध्यादिक ॥ २८ ॥ प्रातःकाल के समस्त कर्मों को शीघ्र ही समाप्त करे। हे अनघ! बाद स्वस्थ मन होकर विद्वानों के

साथ ॥ २९ ॥ अपने गृह के समीप उत्तर भाग में प्रतिमादान के लिये उज्ज्वल मण्डप बनावे। और उस मण्डप के चार द्वार हों और पताका वितान ( चंदोवा ) तोरण आदि से सुशोभित हो ॥ ३० ॥ तथा देखने में मनोहर हो, ऊँचा हो, पुष्प आदि से अलंकृत हो। पूर्व का

लमण्डपम् ॥ चतुर्द्वारं पताकाढ्यं सवितानं सतोरणम् ॥ ३० ॥ मनोहरं महोत्सेधं पुष्पाद्यैः समलङ्कृतम् ॥ शंखचक्रहनूमद्भिः प्राग्द्वारे समलंकृतम् ॥३१॥ गरुत्मच्छार्ङ्गबाणैश्च दक्षिणे समलंकृतम् ॥ गदाखट्वाङ्गदैश्चैव पश्चिमे च विभूषितम् ॥ ३२ ॥ पद्मस्वस्तिकनीलैश्च कौबेर्यां समलंकृतम् ॥ मध्ये हस्तचतुष्काढ्यवेदिकायुक्तमायतम् ॥३३॥ प्रविश्य गीतनृत्यैश्च वाद्यैश्चापि

द्वार शङ्ख, चक्र और हनुमान् जी से अलंकृत हो ॥ ३१ ॥ दक्षिण का द्वार शार्ङ्गधनुष बाण और गरुड़जी से अलंकृत हो। पश्चिम का द्वार गदा खड्ग और अङ्गदजी से विभूषित हो ॥ ३२ ॥ उत्तर का द्वार पद्म ( कमल ) स्वस्तिक और नील जी से समलंकृत हो तथा मध्य का भाग इतना बड़ा होना चाहिये कि जिसमें चार हाथ की वेदी बनी हो ॥ ३३ ॥ गीत नृत्य वाद्य के साथ उस

मण्डप में प्रवेश कर प्रसन्नचेता विद्वानों से पुण्याहवाचन कराकर ॥ ३४ ॥ हे मुने ! राम का स्मरण करता हुआ इस रामनवमी के दिन रामाराधन में तत्पर होकर प्रतिमादान का संकल्प करे ॥ ३५ ॥ रामनवमी के आठो पहर में उपवास कर यथाविधि पूजन कर कहे कि इस सुवर्ण की बनी

समन्वितम् ॥ पुण्याहं वाचयित्वा च विद्वद्भिः प्रीतमानसैः ॥ ३४ ॥ ततः संकल्पयेद्देवं राममेव स्मरन्मुने ॥ अस्यां रामनवम्यां तु रामाराधनतत्परः ॥ ३५ ॥ उपोष्याष्टसु यामेषु पूजयित्वा यथाविधि ॥ इमां स्वर्णमयीं रामप्रतिमां तु प्रयत्नतः ॥ ३६ ॥ श्रीरामप्रीतये दास्ये रामभक्ताय धीमते ॥ प्रीतो रामो हरत्वाशु पापानि सुबहूनि मे ॥ ३७ ॥ अनेकजन्मसंसिद्धान्यभ्यस्तानि महान्ति च ॥ विलिखेत्सर्वतोभद्रं वेदिकोपरि सुन्दरम् ॥ ३८ ॥

राम प्रतिमा को अच्छी तरह ॥ ३६ ॥ श्रीराम जी के प्रीत्यर्थ बुद्धिमान् रामभक्त को दूंगा। इस दान से श्रीराम जी प्रसन्न होकर मेरे बहुत पापों का शीघ्र नाश करें ॥ ३७ ॥ जो कि पाप अनेक जन्म के हैं और परिचित हैं तथा महान् हैं। बाद में वेदिका के ऊपर सुन्दर सर्वतो-

भद्र लिखे ॥ ३८ ॥ और सर्वतोभद्र के मध्यभाग में तीर्थ के जल से पूर्ण घट को स्थापित कर पूजन करे तथा उस घट के ऊपर सुवर्ण रजत अथवा ताम्रपात्र में षट्कोण लिखे ॥ ३९ ॥ बाद एक पल ( चार तोला ) सुवर्ण की बनी, रामप्रतिमा दो भुजावाली, सुन्दर, बामभाग में

मध्ये तीर्थोदकैर्युक्तं पात्रं संस्थाप्य चार्चितम् ॥ सौवर्णे राजते ताम्रे पात्रे षट्कोणमालिखेत् ॥३९॥ ततः स्वर्णमयीं रामप्रतिमां पलमात्रतः ॥ निर्मितां द्विभुजां रम्यां वामाङ्कस्थितजानकीम् ॥ ४० ॥ बिभ्रन्तीं दक्षिणे हस्ते ज्ञानमुद्रां महामुने ॥ वामेनाधः करेणाराद्देवीमालिङ्ग्य संस्थिताम् ॥४१॥ सिंहासने राजते च पलद्वयविनिर्मिते ॥ पञ्चामृतस्नानपूर्वं सम्पूज्य विधिवत्ततः ॥ ४२ ॥ मूलमन्त्रेण नियतो न्यासपूर्वमतन्द्रितः ॥ दिवैवं विधिवत्

स्थित जानकीजी से युक्त हो ॥ ४० ॥ और हे महामुने! दक्षिण हाथ ज्ञानमुद्रा से युक्त हो, वाम हाथ से जानकी जी का आलिङ्गन किये हो ॥ ४१ ॥ उस प्रतिमा में श्रीरामजी को पञ्चामृत से स्नान कराकर दो पल ( आ[illegible]ला ) चाँदी का बना सिंहासन पर उसे स्थापित कर विधिवत्

॥ ४२ ॥ आलस्य रहित होकर नियम पूर्वक मूलमन्त्र से न्यास कर पूजन करे। इस तरह दिन में विधिवत् पूजन कर रात्रि में जागरण करे ॥ ४३ ॥ श्रीरामजी की भक्ति के साथ दिव्य रामकथा को सुनकर गीत नृत्य आदि के द्वारा और अनेक स्तोत्रों का पाठ ॥ ४४ ॥ तथा रामाष्टक से

**कृत्वा रात्रौ जागरणं ततः ॥ ४३ ॥ दिव्यां रामकथां श्रुत्वा रामभक्तिसमन्वितः ॥ गीतनृत्यादिभिश्चैव रामस्तोत्रैरनेकधा ॥ ४४ ॥ रामाष्टकैश्च संस्तुत्य गन्धपुष्पाक्षतादिभिः॥ कर्पूरागुरुकस्तूरीकह्लाराद्यैरनेकधा ॥४५॥ सम्पूज्य विधिवद्भक्त्या दिवारात्रं नयेद्बुधः ॥ ततः प्रातः समुत्थाय स्नानसन्ध्यादिकाः क्रियाः ॥४६॥ समाप्य विधिवद्रामं पूजयेद्विधिवन्मुने ॥ ततो होमं प्रकुर्वीत मूलमन्त्रेण मन्त्रवित् ॥ ४७ ॥ पूर्वोक्तपद्मकुण्डे वा स्थण्डिले**

स्तुति करके गन्ध, पुष्प, अक्षत, कर्पूर, अगुरु, कस्तूरी और अनेक प्रकार के कमलों से ॥ ४५ ॥ विद्वान् भक्ति से विधिवत् पूजन कर दिन और रात्रि का समय व्यतीत करे। प्रातःकाल उठकर स्नान सन्ध्यादिक क्रिया को ॥ ४६ ॥ समाप्त करे, हे मुने! श्रीरामजी का विधिवत् पूजन करे। बाद मन्त्रवेत्ता मूलमन्त्र से हवन करे ॥ ४७ ॥ पूर्व में कहे हुए पद्मकुण्ड में अथवा स्थण्डिल

(वेदी) पर समाहित होकर हे मुने! लौकिकाग्नि में विधान से एक सौ आठ (१०८) ॥ ४८ ॥ घृत मिश्रित पायस की आहुति देवे। हे मुने! अनन्य मन से श्रीरामजी का स्मरण करता हुआ भक्ति से सन्तुष्ट कर आचार्य का पूजन करे ॥ ४९ ॥ रत्न जटित दो कुण्डल और चित्र विचित्र

वा समाहितः ॥ लौकिकाग्नौ विधानेन शतमष्टोत्तरं मुने ॥४८॥ साज्येन पायसेनैव स्मरन् राममनन्यधीः ॥ ततो भक्त्या सु संतोष्य आचार्यं पूजयेन्मुने ॥ ४९ ॥ कुण्डलाभ्यां सरत्नाभ्यामङ्गुलीयैरनेकधा ॥ गन्धपुष्पाक्षतैर्वस्त्रैर्विचित्रैस्तु मनोहरैः ॥५०॥ ततो रामं स्मरन् दद्यादिमं मन्त्रमुदीरयेत् ॥ इमां स्वर्णमयीं रामप्रतिमां समलंकृताम् ॥ ५१ ॥ चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते ॥ श्रीरामप्रीतये दास्ये तुष्टो भवतु राघवः ॥ ५२ ॥ इति

अँगूठी तथा गन्ध, पुष्प, अक्षत मनोहर चित्र विचित्र वस्त्रों से पूजन करे ॥ ५० ॥ इसके बाद श्रीराम जी का स्मरण करता हुआ इस मन्त्र को कहे कि इस सुवर्ण की और अलंकृत रामप्रतिमा का ॥ ५१ ॥ जो कि चित्र विचित्र दो वस्त्रों से आच्छादित है उसे मैं रामस्वरूप हूँ और रामस्वरूप आपको श्रीरामजी [illegible]त्यर्थ देता हूँ। इस प्रतिमा-दान से श्रीराघव प्रसन्न होवें ॥ ५२ ॥

इस विधान से प्रतिमा दान कर अवश्य दक्षिणा ( दानप्रतिष्ठा ) देवे और यथाशक्ति भक्ति से अन्न, गौ, सुवर्ण ॥ ५३ ॥ दो वस्त्र धान्य अलंकार देवे। इस प्रकार जो श्रेष्ठ रामप्रतिमा दान करता है ॥ ५४ ॥ वह ब्रह्महत्या आदि पापों से छूट जाता है इसमें संशय नहीं है और हे सुव्रत! तुलापुरु-

दत्त्वा विधानेन दद्याद्वै दक्षिणां ध्रुवम् ॥ अन्येभ्यश्च यथा शक्त्या गोहिर-ण्यादि भक्तितः ॥ ५३ ॥ दद्याद्वासोयुगं धान्यं तथालंकरणानि च ॥ एवं यः कुरुते रामप्रतिमादानमुत्तमम् ॥ ५४ ॥ ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥ तुलापुरुषदानादिफलमाप्नोति सुव्रत ॥ ५५ ॥ अनेकजन्म-संसिद्धपापेभ्यो मुच्यते ध्रुवम् ॥ बहुनात्र किमुक्तेन मुक्तिस्तस्य करे स्थिता ॥ ५६ ॥ कुरुक्षेत्रे महापुण्ये सूर्यपर्वण्यशेषतः ॥ तुलापुरुषदानाद्यैः कृतैः-

षदान आदि के फल का भागी होता है ॥ ५५ ॥ तथा अनेक जन्मों के सञ्चित पापों से भी अवश्य मुक्त हो जाता है। इस विषय में विशेष कहने से क्या है? उस पुरुष के हाथ में मुक्ति स्थित रहती है ॥ ५६ ॥ जो फल कुरुक्षेत्र में महान् पुण्यप्रद सूर्यग्रहण में समस्त तुलापुरुष

दानादि करने से मिलता है ॥ ५७ ॥ हे सुव्रत ! उस फल को मनुष्य इस रामप्रतिमादान से पाता है। सुतीक्ष्ण जी अगस्त्य जी से बोले कि हे मुने ! प्रायः करके सभी मनुष्य दरिद्र और कृपण होते हैं ॥ ५८ ॥ हे महामुने ! इस प्रतिमादान-व्रत को लोग कैसे करें उसको आप

यल्लभते फलम् ॥ ५७ ॥ तत्फलं लभते मर्त्यो दानेनानेन सुव्रत ॥ सुतीक्ष्ण उवाच ॥ प्रायेण हि नराः सर्वे दरिद्राः कृपणा मुने ॥ ५८ ॥ कैः कर्तव्यं कथमिदं व्रतं ब्रूहि महामुने ॥ अगस्त्य उवाच ॥ दरिद्रश्च महाभाग स्वस्य वित्तानुसारतः ॥ ५९ ॥ पलार्धेन तदर्धेन तदर्धार्धेन वा पुनः ॥ वित्तशाठ्यमकृत्वैव कुर्यादेवं व्रतं मुने ॥ ६० ॥ यदि घोरतरं दुष्टं पातकं नेहते

कहें। अगस्त्यजी बोले कि हे महाभाग ! दरिद्र मनुष्य अपने धन के अनुसार ॥ ५९ ॥ आधा पल अथवा आधा के आधा अथवा उसका भी आधा पल सुवर्ण की प्रतिमा बनाकर और कृपणता का त्याग कर हे मुने ! इस व्रत को करे ॥ ६० ॥ यदि घोरतर दुष्ट पाप किसी तरह नष्ट नहीं हो... और दरिद्र है तो भी यत्न पूर्वक रामनवमी के दिन

इस विधान से प्रतिमा दान कर अवश्य दक्षिणा ( दानप्रतिष्ठा ) देवे और यथाशक्ति भक्ति से अन्न, गौ, सुवर्ण ॥ ५३ ॥ दो वस्त्र धान्य अलंकार देवे। इस प्रकार जो श्रेष्ठ रामप्रतिमा दान करता है ॥ ५४ ॥ वह ब्रह्महत्या आदि पापों से छूट जाता है इसमें संशय नहीं है और हे सुव्रत ! तुलापुरु-

दत्त्वा विधानेन दद्याद्वै दक्षिणां ध्रुवम् ॥ अन्येभ्यश्च यथा शक्त्या गोहिर-ण्यादि भक्तितः ॥ ५३ ॥ दद्याद्वासोयुगं धान्यं तथालंकरणानि च ॥ एवं यः कुरुते रामप्रतिमादानमुत्तमम् ॥ ५४ ॥ ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥ तुलापुरुषदानादिफलमाप्नोति सुव्रत ॥ ५५ ॥ अनेकजन्म-संसिद्धपापेभ्यो मुच्यते ध्रुवम् ॥ बहुनात्र किमुक्तेन मुक्तिस्तस्य करे स्थिता ॥ ५६ ॥ कुरुक्षेत्रे महापुण्ये सूर्यपर्वण्यशेषतः ॥ तुलापुरुषदानाद्यैः कृतैः-

षदान आदि के फल का भागी होता है ॥ ५५ ॥ तथा अनेक जन्मों के सञ्चित पापों से भी अवश्य मुक्त हो जाता है। इस विषय में विशेष कहने से क्या है ? उस पुरुष के हाथ में मुक्ति स्थित रहती है ॥ ५६ ॥ जो फल कुरुक्षेत्र में महान् पुण्यप्रद सूर्यग्रहण में समस्त तुलापुरुष

दानादि करने से मिलता है ॥ ५७ ॥ हे सुव्रत ! उस फल को मनुष्य इस रामप्रतिमादान से पाता है। सुतीक्ष्ण जी अगस्त्य जी से बोले कि हे मुने ! प्रायः करके सभी मनुष्य दरिद्र और कृपण होते हैं ॥ ५८ ॥ हे महामुने ! इस प्रतिमादान-व्रत को लोग कैसे करें उसको आप

**यँल्लभते फलम् ॥ ५७ ॥ तत्फलं लभते मर्त्यो दानेनानेन सुव्रत ॥ सुतीक्ष्ण उवाच ॥ प्रायेण हि नराः सर्वे दरिद्राः कृपणा मुने ॥ ५८ ॥ कैः कर्तव्यं कथमिदं व्रतं ब्रूहि महामुने ॥ अगस्त्य उवाच ॥ दरिद्रश्च महाभाग स्वस्य वित्तानुसारतः ॥ ५९ ॥ पलार्धेन तदर्धेन तदर्धार्धेन वा पुनः ॥ वित्तशाठ्यमकृत्वैव कुर्यादेवं व्रतं मुने ॥ ६० ॥ यदि घोरतरं दुष्टं पातकं नेहते**

कहें । अगस्त्यजी बोले कि हे महाभाग ! दरिद्र मनुष्य अपने धन के अनुसार ॥ ५९ ॥ आधा पल अथवा आधा के आधा अथवा उसका भी आधा पल सुवर्ण की प्रतिमा बनाकर और कृपणता का त्याग कर हे मुने ! इस व्रत को करे ॥ ६० ॥ यदि घोरतर दुष्ट पाप किसी तरह नष्ट नहीं है... और दरिद्र है तो भी यत्न पूर्वक रामनवमी के दिन

उपवास करे ॥ ६१ ॥ जो एकाग्रमन से विधिवत् व्रत करता है वह समस्त पापों से छूट जाता है। प्रातःकाल विधिवत् स्नान कर सन्ध्यादिक क्रिया को करे ॥ ६२ ॥ और अपने वित्त के अनुसार गौ, पृथिवी, सुवर्ण आदि श्रद्धा से विद्वान् रामभक्तों को देवे ॥ ६३ ॥ बाद

कचित् ॥ अकिञ्चनोपि यत्नेन उपोष्य नवमीदिने ॥ ६१ ॥ एकचित्तोऽपि विधिवत्सर्वपापैः प्रमुच्यते ॥ प्रातःस्नानं च विधिवत्कृत्वा सन्ध्यादिकाः क्रियाः ॥ ६२ ॥ गोभूतिलहिरण्यादि दद्याद्वित्तानुसारतः ॥ श्रीरामचन्द्रभक्तेभ्यो विद्वद्भ्यः श्रद्धयान्वितः ॥ ६३ ॥ पारणं त्वथ कुर्वीत ब्राह्मणैश्च स्वबन्धुभिः एवं यः कुरुते भक्त्या सर्वपापैः प्रमुच्यते ॥ ६४ ॥ प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः ॥ उपोषणं न कुरुते कुम्भीपाकेषु पच्यते ॥ ६५ ॥ यत्कि-

ब्राह्मणों के और अपने बन्धुओं के साथ पारण (भोजन) करे। जो इस प्रकार भक्ति से व्रत करता है वह सब पापों से रहित हो जाता है ॥ ६४ ॥ जो मूढ मनुष्य श्रीरामनवमी के दिन उपवास नहीं करता वह कुम्भीपाक-नरकों में पकाया जाता है ॥ ६५ ॥ जो मनुष्य अपनी शक्ति

के अनुसार श्रीरामजी के प्रीत्यर्थ किञ्चित् मात्र भी नहीं करता वह मूढ़ात्मा रौरव नरक में पकाया जाता है इसमें संशय नहीं है ॥ ६६ ॥ सुतीक्ष्ण जी बोले कि हे महामुने ! आपने आठ पहरों में मूलमन्त्र से युक्त पूजा करने को कहा। हे सुव्रत ! उस कथा को कहिये ॥ ६७ ॥ अगस्त्य जी बोले

ञ्छिद्रामममुद्दिश्य क्रियते न स्वशक्तितः ॥ रौरवे स तु मूढात्मा पच्यते नात्र संशयः ॥ ६६ ॥ सुतीक्ष्ण उवाच ॥ यामाष्टके तु पूजा वै तत्र चोक्ता महामुने ॥ मूलमन्त्रेण संयुक्ता तां कथां वद सुव्रत ॥६७॥ अगस्त्य उवाच ॥ सर्वेषां राममन्त्राणां मन्त्रराजं षडक्षरम् ॥ इदं तु स्कान्दे मोक्षखण्डे श्रीरामं प्रति रुद्रगीतायां रुद्रवाक्यम् ॥ मुमूर्षोर्मणिकर्ण्यन्ते अर्धोदकनिवासिनः ॥६८॥ अहं दिशामि ते मन्त्रं तारकस्योपदेशतः ॥ श्रीरामरामरामेति एतत्तारकमुच्यते

कि समस्त राममन्त्रों में षडक्षर मन्त्रराज है। यह स्कन्द पुराण के मोक्षखण्ड में आई हुई रुद्रगीता में श्रीरामजी के प्रति रुद्र का वाक्य है। मरने की इच्छा करने वाले मनुष्य का आधा शरीर मणिकर्णिका के जल में होने पर ॥ ६८ ॥ तारक मन्त्रोपदेश में मैं आपके मन्त्र का उपदेश करता

हूँ। 'श्रीराम राम राम' यह तारक मन्त्र कहा जाता है॥ ६९॥ हे जानकीनाथ! इसलिये आप परं ब्रह्म कहे जाते हैं और ब्रह्म तारक कहा गया है। इसलिये आपकी पूजा श्रेष्ठ है॥ ७०॥ प्रसन्न मन से पीठाङ्ग देवों का और आवरण देवों का पूजन करे, प्रधान देव का॥ ७१॥ यथाविधि

॥ ६९॥ अतस्त्वं जानकीनाथ परंब्रह्माभिधीयसे॥ तारकं ब्रह्म चेत्युक्तं तेन पूजा प्रशस्यते॥ ७०॥ पीठाङ्गदेवतानां तु आवृत्तीनां तथैव च॥ आदावेव प्रकुर्वीत देवस्य प्रीतमानसः॥ ७१॥ उपचारैः षोडशभिः पूजा कार्या यथाविधि॥ आवाहनं स्थापनं च सम्मुखीकरणं तथा॥७२॥ एवं मुद्रां प्रार्थनां च पूजामुद्रां प्रयत्नतः॥ शंखपूजां प्रकुर्वीत पूर्वोक्तविधिना ततः॥७३॥ कलशं वामभागे च पूजाद्रव्याणि चादरात्॥ पीठे सम्पूज्य यत्नेन

षोडशोपचार से पूजन करे। आवाहन, स्थापन, तथा सम्मुखीकरण॥ ७२॥ इस तरह पूर्वोक्त-विधि से अच्छी तरह मुद्रा प्रार्थना पूजामुद्रा शङ्खपूजा को करे॥ ७३॥ अपने वामभाग में प्रेम से कलश और पूजन सामग्री रखकर पीठ पर आत्मरूप श्रीराम जी का भली-भाँति पूजन कर मंत्र

का उच्चारण करे ॥ ७४ ॥ इसी तरह आलस्य रहित होकर प्रत्येक प्रहर में पात्रों ( पूजन सामग्री ) का आसादन करे। बुद्धिमान् श्रीराम जी के लिये पीताम्बर समर्पण कर पूजन करे ॥ ७५ ॥ भक्ति से सुवर्ण का यज्ञोपवीत और नाना प्रकार के रत्न आभूषण श्रीराम जी के लिये समर्पण करे

आत्मानं मन्त्रमुच्चरेत् ॥ ७४ ॥ पात्रासादनमप्येवं कुर्याद्यामेष्वतन्द्रितः ॥ पीताम्बराणि देवाय प्रार्पयन्नर्चयेत् सुधीः ॥ ७५ ॥ स्वर्णयज्ञोपवीतानि दद्या-द्देवाय भक्तितः ॥ नानारत्नविचित्राणि दद्यादाभरणानि च ॥७६॥ हिमा-म्बुघृष्टं रुचिरं घनसारं मनोहरम् ॥ क्रमात्तु मूलमन्त्रेण उपचारान् प्रकल्पयेत् ॥ ७७ ॥ कह्लारैः केतकैर्जात्यैः पुन्नागाद्यैः प्रपूजयेत् ॥ चम्पकैः शतपत्रैश्च सुगन्धैः सुमनोहरैः ॥ ७८ ॥ पाद्यचन्दनधूपैश्च तत्तन्मन्त्रैः प्रपूजयेत् ॥

॥ ७६ ॥ हिम के जल से घिसे हुए मनोहर घनसार ( चन्दन ) को श्रीराम जी के लिये दे और क्रम से मूल मंत्र पढ़ कर समस्त उपचारों को दे ॥ ७७ ॥ कल्हार, केतकी, जाति, पुन्नाग, चम्पक, शतपत्र और भी सुगन्धित [illegible]हर पुष्पों से पूजन करे ॥ ७८ ॥ तत्तत् मन्त्रों को पढ़ कर पाद्य

चन्दन धूप से पूजन करे और विधिपूर्वक भक्ति से श्रीराम जी के लिये भक्ष्य भोज्य आदि अर्पण करे ॥ ७९ ॥ उपस्कर ( सामग्री ) सहित श्रीराम जी की प्रतिमा का दान कर कोटि जन्म के कृत दारुण नानारूप के घोर पापों से मनुष्य छूट जाता है ॥ ८० ॥ हे मुने ! उसी क्षण में पापयुक्त हो

भक्ष्यभोज्यादिकं भक्त्या देवाय विधिनार्पयेत् ॥ ७९ ॥ येन सोपस्करं देवं दत्त्वा पापैः प्रमुच्यते ॥ जन्मकोटिकृतैर्घोरैर्नानारूपैश्च दारुणैः ॥ ८० ॥ विमुक्तः स्यात् क्षणादेव राम एव भवेन्मुने ॥ श्रद्दधानस्य दातव्यं श्रीरामनवमीव्रतम् ॥ ८१ ॥ सर्वलोकहितायेदं पवित्रं पापनाशनम् ॥ लोहेन निर्मितं वापि शिलया दारुणापि वा ॥ ८२ ॥ एकेनैव प्रकारेण यस्मै कस्मै च वा मुने ॥ कृतं सर्वं प्रयत्नेन यत्किञ्चिदपि

कर श्रीराम ही हो जाता है । हे महामुने ! जो श्रद्धालु हो उसे श्रीरामनवमी व्रत का उपदेश देना ॥ ८१ ॥ यह समस्त लोकों का हित करने वाला पवित्र और पापनाशक है । श्रीराम जी की प्रतिमा लोहा पाषाण अथवा काष्ठ की ही बनी हो ॥ ८२ ॥ हे मुने ! जिस किसी भी प्रकार से जिस किसी के भी लिये इस व्रत को करावे । जो भी कुछ प्रयत्नपूर्वक भक्ति के साथ करे वह सब सफल

भक्तितः ॥ ८३ ॥ जपेदेकान्तमासीनो यावत्स दशमीदिनम् ॥ [illegible]न स्यात् पुनः पूजा दशम्यां भोजयेद्द्विजान् ॥ ८४ ॥ भक्त्या भोज्यैर्बहुविधैर्दद्या-द्भक्त्या च दक्षिणाम् ॥ कृतकृत्यो भवेत्तेन सद्यो रामः प्रसीदति ॥ ८५ ॥ तूष्णीं तिष्ठन्नरो वापि पुनरावृत्तिवर्जितः ॥ द्वादशाब्दे कृतेनापि यत्पापं चापि मुच्यते ॥ ८६ ॥ विलयं याति तत्सर्वं श्रीरामनवमीव्रतात् । जपश्च राम-मन्त्राणां यो न जानाति तस्य वै ॥ ८७ ॥ उपोष्य संस्मरेद्रामं न्यासपूर्व-

होता है ॥ ८३ ॥ अथवा जब तक दशमी का दिन न आवे तब तक एकान्त में बैठकर मन्त्र का जप करे और दशमी के दिन पुनः पूजा कर ब्राह्मणों को भोजन करावे ॥ ८४ ॥ भक्ति के साथ अनेक प्रकार के भोज्य पदार्थों से भोजन कराकर भक्ति से दक्षिणा दे। इससे वह कृतकृत्य हो जाता है और उसपर भगवान् श्रीरामजी सद्यः प्रसन्न हो जाते हैं ॥ ८५ ॥ यदि मनुष्य मौन होकर मुनि वृत्ति से बारह वर्ष तक व्रत कर लेता है तो उसके सब पाप नष्ट हो जाते हैं और व्रतकर्ता पुनरावृत्ति ( आवागमन ) से छूट जाता है ॥ ८६ ॥ जो श्रीरामनवमी व्रत तथा राम मन्त्रों का जप नहीं जानता उसके समस्त [illegible] नष्ट हो जाते हैं ॥ ८७ ॥ निरालस होकर उपवास कर न्यास-

पूर्वक श्रीरामजी का स्मरण करे। और गुरु से न्यास के साथ मन्त्र को प्राप्त कर न्यासपूर्वक मन्त्र का जप करे॥ ८८॥ समाहित चित्त होकर प्रत्येक पहर में विधि पूर्वक पूजन करे। मुक्ति को चाहने वाला पुरुष हमेशा श्रीरामनवमी व्रत को करे। वह समस्त पापों से छूट कर सनातन

मतन्द्रितः॥ गुरुलब्धोऽयं मन्त्रस्तु न्यसेन्न्यासपुरःसरः॥ ८८॥ यामे यामे च विधिना कुर्यात्पूजां समाहितः॥ मुमुक्षुश्च सदा कुर्याच्छ्रीरामनवमी-व्रतम्॥ मुच्यते सर्वपापेभ्यो याति ब्रह्म सनातनम्॥ ८९॥ इति श्रीस्कन्दपुराणे अगस्त्यसंहितायामगस्त्यसुतीक्ष्णसंवादे रामनवमीव्रतविधिः समाप्तः॥

ब्रह्म को प्राप्त होता है॥ ८९॥ इति श्रीस्कन्दपुराणे अगस्त्यसंहितायामगस्त्यसुतीक्ष्णसंवादे सनाढ्यवंशोद्भव व्याकरणाचार्य 'विद्यारत्न' पं० माधवप्रसादव्यासेन कृता रामनवमीव्रतविधे-र्भाषाटीका समाप्ता॥

मुद्रक—पं० बैकुण्ठनाथ भार्गव, आनन्दसागर प्रेस, गायघाट, बनारस १.